# Document Information

Text title : durgAsaptashlokI
File name : durga7.itx
Location : doc_devii
Language : Sanskrit
Subject : philosophy/hinduism/religion
Transliterated by : Kapila Shankaran Love kapilalove at gmail.com
Proofread by : Kapila, Shriramana Sharma jamadagni at gmail.com, NA
Latest update : November 22, 2013
Send corrections to : Sanskrit@cheerful.com
Site access : http://sanskritdocuments.org

# ॥ श्रीदुर्गासप्तश्लोकी ॥

## ॥ श्रीदुर्गासप्तश्लोकी ॥

। अथ सप्तश्लोकी दुर्गा ।
शिव उवाच
देवि त्वं भक्तसुलभे सर्वकार्यविधायिनी ।
कलौ हि कार्यसिद्ध्यर्थमुपायं ब्रूहि यत्नतः ॥

देव्युवाच
शृणु देव प्रवक्ष्यामि कलौ सर्वेष्टसाधनम् ।
मया तवैव स्नेहेनाप्यम्बास्तुतिः प्रकाश्यते ॥

ॐ अस्य श्रीदुर्गासप्तश्लोकीस्तोत्रमहामन्त्रस्य नारायण ऋषिः ।
अनुष्टुभादीनि छन्दांसि । श्रीमहाकालीमहालक्ष्मीमहासरस्वत्यो देवताः ।
श्रीदूर्गाप्रीत्यर्थं सप्तश्लोकी दुर्गापाठे विनियोगः ॥

ज्ञानिनामपि चेतांसि देवी भगवती हि सा ।
बलादाकृष्य मोहाय महामाया प्रयच्छति ॥ १॥

दुर्गे स्मृता हरसि भीतिमशेषजन्तोः
स्वस्थैः स्मृता मतिमतीव शुभां ददासि ।
दारिद्र्यदुःखभयहारिणि का त्वदन्या
सर्वोपकारकरणाय सदाऽऽर्द्रचित्ता ॥ २॥

सर्वमङ्गलमाङ्गल्ये शिवे सर्वार्थसाधिके ।
शरण्ये त्र्यम्बके गौरि नारायणि नमोऽस्तु ते ॥ ३॥

शरणागतदीनार्तपरित्राणपरायणे ।
सर्वस्यार्तिहरे देवि नारायणि नमोऽस्तु ते ॥ ४॥

सर्वस्वरूपे सर्वेशे सर्वशक्तिसमन्विते ।
भयेभ्यस्त्राहि नो देवि दुर्गे देवि नमोऽस्तु ते ॥ ५॥

रोगानशेषानपहंसि तुष्टा रुष्टा तु कामान् सकलानभीष्टान् ।
त्वामाश्रितानां न विपन्नराणां त्वामाश्रिता ह्याश्रयतां प्रयान्ति ॥ ६॥

सर्वाबाधाप्रशमनं त्रैलोक्यस्याखिलेश्वरि ।
एवमेव त्वया कार्यमस्मद्वैरि विनाशनम् ॥ ७॥

॥ इति दुर्गासप्तश्लोकी सम्पूर्णा ॥

Encoded and proofread by Kapila Shankaran Love kapilalove at gmail.com
Proofread by Shriramana Sharma jamadagni at gmail.com, NA



.. shrIdurgAsaptashlokI ..
was typeset on April 10, 2015

Please send corrections to *sanskrit@cheerful.com*